# Shri RudradvAdashanama StotraM

# श्रीरुद्रद्वादशनामस्तोत्रं

## Sanskrit Document Information



Text title : rudradvAdashanAmastotram

File name : rudradvAdashanAmastotram.itx

Category : shiva, dvAdasha

Location : doc_shiva

Proofread by : NA

Latest update : January 11, 2019

Send corrections to : sanskrit@cheerful.com



January 11, 2019

*sanskritdocuments.org*

# श्रीरुद्रद्वादशनामस्तोत्रं



प्रथमं तु महादेवं द्वितीयं तु महेश्वरं ।
तृतीयं शङ्करं प्रोक्तं चतुर्थं वृषभध्वजम् ॥ १॥

पञ्चमं कृत्तिवासं च षष्ठं कामाङ्गनाशनं ।
सप्तमं देवदेवेशं श्रीकण्ठं चाष्टमं तथा ॥ २॥

नवमं तु हरं देवं दशमं पार्वतीपतिं ।
रुद्रमेकादशं प्रोक्तं द्वादशं शिवमुच्यते ॥ ३॥

एतद्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
गोघ्नश्चैव कृतघ्नश्च भ्रूणहा गुरुतल्पगः ॥ ४॥

स्त्रीबालघातकश्चैव सुरापो वृषलीपतिः ।
सर्वं नाशयते पापं शिवलोकं स गच्छति ॥ ५॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं चन्द्रशेखरं ।
इन्दुमण्डलमध्यस्थं वन्दे देवं सदाशिवम् ॥ ६॥

॥ इति श्रीरुद्रद्वादशनामस्तोत्रं समाप्तम् ॥

*Shri RudradvAdashanama StotraM*

pdf was typeset on January 11, 2019

Please send corrections to *sanskrit@cheerful.com*

